कोऽसौ' इति 'स' यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ० १।५।२३) इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान्बादरायण आचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च ह वैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरंमदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते तं ते प्राप्य न चन्द्रलोकादिव भुक्तभोगा(२) आवर्तन्ते। कुतः ? 'तयोर्ध्वमायन्नमृतत्वमेति'(३) (छा०८।६।६।,कठ०६।१६) 'तेषां न पुनरावृत्तिः' (बृ० ६।२।१५) 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा० ४।१५।१) 'ब्रह्मलोकमभिसंपद्यते' (छा० ८।१५।१) 'न च पुनरावर्तते' (छा०८।१५।१) इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि

---

स यथेति ॥ भोगसाम्ये सः दृष्टान्तो यथेत्यर्थः ॥ तेनो इति उशब्दोऽप्यर्थः ॥ सलोकतामपीत्यन्वयः। सायुज्यं समानदेहत्वं क्रमेण मुक्तिर्वा ॥ २१ ॥

शास्त्रसमाप्तिं सूचयन् सूत्रकारं पूजयति—भगवानिति ॥ भगवत्त्वं सर्वज्ञत्वम् । सूत्रद्वारा शिष्याणामाचारे स्थापनाद्—आचार्यत्वम् । बादरायणपदेन बदरिकाश्रमवासोक्त्या नित्यसर्वज्ञस्य परमगुरोर्नारायणस्य प्रसादद्योतनात् तत्प्रणीतशास्त्रे निरवद्यवामुद्द्योतयति ।। सगुणविद्यायाः सातिशयफलत्वेऽपि ततो निर्गुणविद्ययाऽनावृत्तिरित्याह—अनावृत्तिः शब्दादनावृत्तिः शब्दादित्यादि ॥ ये ब्रह्मलोकं गच्छन्ति, ते तं प्राप्य नावर्तन्ते इति सम्बधः ॥ लोकं विशिनष्टि—यस्मिन्निति ॥ इतः अस्मात् पृथिवीलोकात् तृतीयस्यां दिवि यो ब्रह्मलोकः, तस्मिन्नर इति, ण्य इति च, अर्णवतुल्यौ सुधाह्रदावित्यर्थः ।। ऐरम् अन्नमयं यदीयं मदकरं सरः, सोमसवनः अमृतवर्षी । यद्यपि तेषामिह न पुनरावृत्तिरिमं मानवमिति च श्रुतिषु "इहेमम्" इतिविशेषणादस्मिन् कल्पे ब्रह्मलोकगतानां कल्पान्तरे आवृत्तिर्भाति, तथापीश्वरोपास्ति विना पञ्चाग्निविद्याश्वमेधदृढब्रह्मचर्यादिसाधनैः ये गताः तेषां तत्त्वज्ञाननियमाभावादावृत्तिः स्यात् । ये तु दहरादीश्वरोपास्त्या गताः, तेषां सगुणविद्याफलक्षयेऽपि निरवग्रहेश्वरानुग्रहाल्लब्धात्मज्ञानान्मुक्तिरिति नियम इत्यभिप्रेत्याह—अन्तवत्त्वेऽपि

---

(२) दिवत् वियुक्तभोगा इति प्रा० पु० पाठः ; (३) त्वम् इति प्रा० पु० पाठः प्रामादिकोभाति ।

त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् 'कार्यात्यये तदध्यक्षेण सहातः-परम्' (ब्र० सू० ४।३।१०) इत्यत्र । सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः । तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यापादकृतौ चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## समाप्तमिदं ब्रह्मसूत्रशाङ्करभाष्यम् ॥

---

त्विति ॥ नन्वत्र सूत्रकृता सगुणविदामेवानावृत्तिक्रम उक्तः, न निर्गुणविदाम्, तत्र को हेतुरित्यशङ्क्य तेषामावृत्तिशङ्काभावादित्याह--सम्यगिति ॥ तदाश्रयणेनैवेति ।। गु० विदामावृत्तिप्राप्तौ सम्यग्दर्शनाश्रयणेनैवानावृत्तिः साधिता, अतः स्वत एव सम्यग्दर्शिनामावृत्तिशङ्का नेति किमु वाच्यमित्यर्थः ।। यत्र अध्यायसमाप्तिः, तत्र पदमात्रस्य अभ्यासो दर्शितः, इह सूत्रस्यैवाभ्यासात् शास्त्रसमाप्तिर्द्योत्यत इत्याह-अनावृत्तिः शब्दादिति ।। एवं समन्वयोक्त्या ब्रह्मात्मैक्यस्य वेदान्तप्रमाणकत्वमवधारितम्, वाक्यार्थज्ञाने स्मृतितर्कादिसर्वप्रकारविरोधः परिहृतः साधनसम्पत्तिश्च दर्शिता ।। तस्माद्विवेकादिसाधनसम्पन्नस्य श्रवणाद्यावृत्तिनिरस्तसमस्तप्रतिबन्धस्य अखण्डात्मसम्बोधात् समूलबन्धध्वंसे सति आविर्भूतनिष्कलङ्कानन्तस्वप्रकाशचिदानन्दात्मना अवस्थानमिति सिद्धम् ।। ४ ।। (७) ।।

नानाविधग्रन्थजातं वीक्ष्य सम्यग्यथामति ।
शारीरकस्य भाष्यस्य कृता व्याख्या सतां मुदे ॥ १ ॥

अन्तर्यामी जगत्साक्षी सर्वकर्ता रघूद्वहः ।
अतोऽत्र दोषोऽशंक्यः स्यादेष ह्येवेति शासनात् ॥ २ ॥

वक्षस्यक्ष्णोश्च पार्श्वे करतलयुगले कौस्तुभाभां दयां च
सीतां कादण्डदीक्षामभववरयुतां वीक्ष्य रामाङ्गसङ्गः ॥
स्वास्याः क्व स्यादितीत्थं हृदि कृतमनना भाष्यरत्नप्रभेयं
स्वत्मानन्दैकलुब्धा रघुवरचरणाम्भोजयुग्मं प्रपन्ना ॥ ३ ॥

इति श्रीमत्परमहंसपरिव्राकाचार्यश्रीमद्गोपालसरस्वतीपूज्यापदशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य )-रत्नप्रभायां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः।। ४ ।।

समाप्तश्चायं ग्रन्थः ।

# द्वितीयभागस्थब्रह्मसूत्राणामकाराद्यनुक्रमणिका।

इति ।

इति ।

## सूत्रानुक्रमणिका ।

